

धार्मिक-सज्जनोपयोगिनी
पंडितकेशवभट्टज्योतिर्विदा

संस्कृता-शोधिता च

इयम्

# वटुकपूजा

सप्तर्षिसंवत्सरे ५०९८, विक्रमसंवत्सरे २०७९
ईस्वीवत्सरे २०२२



धार्मिक-सज्जनोपयोगिनी

पंडितकेशवभट्टज्योतिर्विदा

संस्कृता-शोधिता च

इयम्

# वटुकपूजा

सप्तर्षिसंवत्सरे ५०९८, विक्रमसंवत्सरे २०७९

ईस्वीवत्सरे २०२२

# अथ वटुकपूजाविधीः॥

**(चूने से पूजा स्थान के ईशान कोण पर अष्टदल ब्रह्मकलश लिखकर, अष्टदल कमल पर अखरोट और विष्टर युक्त पानी का गढ़ा कलश रखें। उसके नैर्ऋत कोण पर प्रणीतपात्र भी रखके कलश को फी मंत्र फूल व अक्षत छोडना)**

तत्रादौ कलशस्थापनम्

**(कलशेपुष्पम्) ॐकारो यस्य मूलं क्रमपदजठरंछन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलः स्यादथर्वः प्रतिष्ठा। यज्ञच्छायासुशीतो द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्यात्रिकालं दुरितभयहरः पातु नो वेदवृक्षः॥ मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्युक्ता-मिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम्। गायत्रीं वरदाभयाङ्कुश-करां शूलं कपालं गुणं शङ्खं चक्रमथारबिन्दयुगलं हस्तैर्वहन्तीं भजे॥ आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी। गायत्री च्छन्दसांमातर्ब्रह्मयोने नमोस्तु ते॥३॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रम्। तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥ "देवीनामेकेन्द्राणीवरुणान्याग्नायीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्ण-व्योऽतो देवा दैवी वा"॥ अभि नो देवीरवसा महः शर्मणा नृपत्नीः, अच्छिन्नपत्राः सचन्ताम्॥ इहेन्द्राणीमुपह्वये वारुणानीं स्वस्तये,**

अग्नायीं सोमपीतये॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्, पिपृतां नो भरीमभिः। तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः, गन्धर्वस्य ध्रुवे पदे॥ स्योना पृथिवि भवानृक्षरा निवेशनी, यच्छाऽनः शर्म सप्रथः॥ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे, पृथिव्याः सप्तधामभिः॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पांसुरे॥ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः, अतो धर्माणि धारयन्॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे, इन्द्रस्य युज्य: सखा॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम्॥ तद्विप्रासो विपन्यवो जागृवां सः समिन्धते, विष्णोर्यत्परमं पदम्॥ इति विष्णुभद्रम्॥ ॐ भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्॥ ३॥ क्षेत्रपालयोरक्षतम् (अब क्षेत्रपालों में अक्षत डालना) अश्वमेधे घोराणामार्षम्॥ ॐ द्रष्ट्रेनम उपद्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नमः उपख्यात्रे नमो नुक्शास्त्रे नमः शृण्वते नमः उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमानाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः शान्ताय नमस्तपसे नमः। भूतं भव्यं भविष्यद्वषट्स्वाहा नमः, ऋक्सामयजुर्वषट्स्वाहा नमो, गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः,

पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः, पिता पुत्रः पौत्रो वषट्स्वाहा नमः, प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्वषट्स्वाहा नमः॥ यो विश्वचक्षुरुत विश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात्। संबाहुभ्यां धमते संपतत्रैर्द्यावापृथिवी जनयन्देव एकः॥ ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चस्वी जायतामस्मिन्राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां दोग्ध्री धेनुर्वोढाऽनड्वानाशुः सप्तिर्जिष्णूरथेष्ठः पुरन्ध्रिर्योषा सभेयो युवाऽस्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवतीर्न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्॥ कलशेपुष्पम् (कलश पर अक्षत और फूल चढ़ाना)

“इषे त्वोर्जे त्वेति ब्रह्मणः”। इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे, आप्यादध्वमग्न्या देवभागं प्रजावतीरनमीवा अयक्ष्मा मावस्ते न ईशत माऽघशंसः, परि वो रुद्रस्य हेतिर्वृणक्तु ध्रुवा अस्मिन्गोपतौ स्यात बह्वीर्यजमानस्य पशून्पाहि यजमानस्य पशुपा असि, देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे, गोषदसि प्रत्युष्टं रक्षः प्रत्युष्टाऽरातिः प्रेयमागाद्धिषणा बर्हिरच्छ मनुना कृता, स्वधया वितष्टा उर्वन्तरिक्षं वीहीन्द्रस्य परिषूतमसि माधो मोपरि परस्त ऋद्ध्या, स मा च्छेता ते

मा रिषत् देवबर्हिः शतवल्शं विरोह सहस्रवल्शं विवयं रुहेम, आदित्या रास्नासीन्द्राण्याः सन्नहनं पूषा ते ग्रन्थिं ग्रथ्नातु स ते मा स्थादिन्द्रस्य त्वा बाहुभ्यामुद्यच्छे बृहस्पतेस्त्वा मूर्ध्ना हरामि देवं गममसि तदा हरन्ति कवयः पुरस्ताद्देवेभ्यो जुष्टमिह बर्हिरासदे, वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्तीः, मधुमद्घृतवत्पिन्वमाना जीवा जीवन्तीरुप वः सदेम मातरिश्वानो घर्मोसि द्यौरसि पृथिव्यसि विश्वधाया परेण, धाम्ना, ह्वुतासि माह्वाः सा विश्वायुः सा विश्वव्यचाः सा विश्वधाया हुतस्तोको हुतो द्रप्सोऽग्नये बृहते नाकाय स्वाहा, द्यावापृथिवीभ्यां सपृच्च्यध्वमृतावरी ऊर्मिणा मधुमत्तमा मान्द्राधानस्य सातयः, इन्द्रस्य त्वा भागं सोमेनातनच्म्यदस्तमसि विष्णवे विष्णो हव्यं रक्षस्वापो जागृत, महितॄणां मवोस्तु द्युम्नं मित्रस्यार्यम्णः, दुराधर्षं वरुणस्य, नहि तेषाममाचन नाध्वसु वरणेषु ईशे रिपुरघशंसः, यस्मै पुत्रासो अदितेः प्रजीवसे मर्त्याय ज्योतिर्यच्छन्त्यजस्रम्, सोमानं स्वरणं कृणुहि ब्रह्मणस्पते, कक्षीवन्तं य औषजो यो रैवाण्यो अमीवहा वसुवित् पुष्टिवर्धनः सनः सिषक्तु यस्तुरः, मा नः शंसो अररुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते॥ प्रणीतपात्रे पुष्पत्रयम् (अब तिल, अक्षत, पुष्प,

पानी और विष्टर युक्त प्रणीतपात्र में तिलक और ३ मंत्रों से ३ फूल डालना) **संव्वः सृजामि हृदयं संसृष्टं मनो अस्तु वः॥१॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः॥२॥ संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः। आत्मा वो अस्तु सं प्रियः संप्रियास्तन्वो मम॥३॥** तद्विष्टरेण कलशे जीवादानम् (अब इसी प्रणीतपात्र के विष्टर से कलश और क्षेत्रेशों को जीवादान देना) **अग्नेरायुरसि तस्य ते मनुष्या आयुष्कृतस्तेनास्मा अमुष्मा आयुर्देहि॥ इन्द्रस्य प्राणः स ते प्राणन्ददातु यस्य प्राणस्तस्मै ते स्वाहा॥ पितॄणां प्राणास्ते ते प्राणन्ददातु येषां प्राणस्तेभ्यो वः स्वाहा॥ मरुतां प्राणास्ते ते प्राणन्ददातु येषां प्राणस्तेभ्यो वः स्वाहा॥ विश्वेषान्देवानां प्राणास्ते ते प्राणन्ददातु येषां प्राणस्तेभ्यो वः स्वाहा॥ प्रजापतेः प्राणः परमेष्ठिनः प्राणस्तौ ते प्राणन्दत्तां ययोः प्राणस्ताभ्यां वां स्वाहा॥ यदऽसर्पस्त-त्सर्प्पिरभवो यन्नवमैस्तन्नवनीतमभवो यदऽद्रियथास्तद्घृतमभवो॥ घृतस्य धाराममृतस्य पन्थामिन्द्रेण दत्तं प्रयतं मरुद्भिः। तत्त्वा विष्णुरन्वपश्यत्तत्त्वेडा गव्यैरयत्॥ पावमानेन त्वा स्तोमेन गायत्र्या वर्तन्या पांशोवीर्येणोद्धराम्यसौ। बृहता त्वा रथन्तरेण त्रिष्टुभा वर्तन्या शुक्रस्य वीर्येणोत्सृजाम्यसौ॥ अग्नेस्त्वा मात्रया जगत्या वर्तन्या देवस्त्वा सवितोन्नयतु जीवातवे जीवनस्याऽया असौ। देवा आयुष्मन्तस्ते-**

ऽमृतेनाऽयुष्मन्तस्तेषामयमायुषायुष्मानऽस्त्वसौ॥ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तस्यायमायुषायुष्मानऽस्त्वसौ॥ अग्निरायुष्मान्सवनस्पतिभिरायुष्मांस्तस्यायमायुषायुष्मानऽस्त्वसौ॥ यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तस्यायमायुषायुष्मानऽस्त्वसौ॥ सोम आयुष्मान्स औषधीभिरायुष्मांस्तस्यायमायुषाऽयुष्मानस्त्वसौ॥ औषधय आयुष्मतीस्ता अद्भिरायुष्मतीस्ता सामयमाऽयुषाऽयुष्मानऽस्त्वसौ॥ इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण संशिशाधि। मातेवास्मा अदिते शर्म यच्छ विश्वेदेवा जरदष्टिर्यथाऽसत्॥ अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, मित्रावरुणयोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव, बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव॥ मण्डपदिक्षु रक्षोघ्नमंत्रैस्तिलार्घक्षेपणं (अब पूजा मण्डप की विभिन्न दिशाओं को तिल फैंकना) (पूर्वे) ये देवाः पुरः सदोऽग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (दक्षिणे) ये देवा दक्षिणात्सदो यमनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (पश्चिमे) ये देवाः पश्चात्सदो मरून्नेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (उत्तरे) ये देवा उत्तरात्सदो मित्रावरुणोनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (उर्ध्वे) ये देवाः उपरिषदः सोमनेत्रा अवस्वदन्तो रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यः स्वाहा॥ (आग्नेये)

इदमहं रक्षोभिः समूहाम्यग्ने संदह रक्षः संदग्धं रक्षोग्नये पुरः सदे रक्षोघ्ने स्वाहा॥ (नैर्ऋते) यमाय दक्षिणात्सदे रक्षोघ्ने स्वाहा॥ (वायव्ये) मरुद्भ्यः पश्चात्सद्भ्यः रक्षोहभ्यः स्वाहा॥ (ईशाने) मित्रावरुणाभ्यामुत्तरात्सद्भ्यां रक्षोहभ्यां स्वाहा॥ (पाताले) सोमायोपरिषदेऽवस्वदते रक्षोघ्ने स्वाहा॥ द्रव्यशुद्ध्यर्थं प्रणीतपात्रजलालोडनम् (अब प्रणीतपात्र के विष्टर से उसका पानी आलोडना) रथः पञ्चवाही दक्षिणा॥ तद्विष्टरेण जलेशुद्धिः (उस विष्टर से द्रव्यों की शुद्धि हेतु जल छिडकना) (पहले जल को) आपो हिष्ठा मयोभुवस्ता न ऊर्जे दधातन, महे रणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयते ह नः, उशतीरिव मातरः। तस्मा अरङ्ग माम वो यस्य क्षयाय जिन्वथ, आपो जनयथा च नः॥ (अक्षत को) आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्, भवावाजस्य सङ्गथे॥ (फूलों को) पुष्पवतीः प्रसुमतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥ (तिलक को) गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ (दर्भ को) कर्मणे वां वानस्पत्यमसि प्रत्युष्टं रक्षः प्रत्युष्टारातिः प्रियमागाद्विषेण बर्हिरच्छ मनुना कृता सुधया वितुष्ट उर्वन्तरिक्षं वीहि। (धूप को) धूरसि धूर्व धूर्वन्तं योस्मान्धूर्वति तं धूर्वय वयं धूर्वामस्तं च धूर्व। देवानामसि वह्नितमं सस्नितमं पप्रितममिष्टतमं देवहूतमं विष्णोः

क्रमोऽस्याह्लुतमसि हविर्दानं दृंहस्व माह्वान्मित्रस्यत्वा चक्षुषा प्रेक्ष उरु त्वा वाताय वसवस्त्वा धूपयन्तु गायत्रेण च्छन्दसाऽङ्गिरस्वत् रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन च्छन्दसाङ्गिरस्वत्। आदित्यास्त्वा धूपयन्तु जागतेन च्छन्दसाङ्गिरस्वत्। विश्वे त्वा देवा वैश्वानरा धूपयन्तु आनुष्टुभेन च्छन्दसाङ्गिरस्वत् इन्द्रस्त्वा धूपयतु वरुणस्त्वा धूपयतु विष्णुस्त्वा धूपयतु। (सूरज को) उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्॥ (दीप को) तेजोसि शुक्रमसि ज्योतिरसि धामासि प्रियन्देवानामनाधृष्टं देवयजनं देवताभ्यस्त्वा देवताभ्यो गृह्णामि यज्ञेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि। स्वललाटे तिलकं (स्वयं को तिलक लगाना) अध्वर्योयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय। विश्वस्मै भूताय ध्रुवो अस्तु देवाः स पिन्वस्व घृतवद्देवयज्ञ। अर्घपुष्पौ (स्वयं पर अक्षत और फूल भी चढ़ाना) इहैवैधि मा पच्योष्ठाः पर्वता इवाविचाचलत्। इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमुदारय॥ स्वासने दर्भद्वयम् (दर्भ के दो कान्ड स्वयं के आसन के रूप में छोडना) इममिन्द्रो अदीधरद्ध्रुवन्ध्रुवेण हविषा हविः। तस्मै सोमो अधिब्रुवत्तस्मा उ ब्रह्मणस्पतिः॥ भूमौ आसनम् (कलश को आसन के रूप में दो दर्भ कान्ड छोड़ना) ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि॥ गन्धार्घपुष्पाणि

(भूमी को तिलक, फूल और अक्षत लगाना) **मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्। पिपृतां नो भरीमभिः॥** आकाशे गन्धादि (आकाश की ओर भी तिलक, फूल और अक्षत चढ़ाना) **वडित्था पर्वतानां क्षेत्रं बिभर्षि पृथिवि प्रया भुमिं प्रवत्वति मह्ना जिनोषि महिनि॥** (अष्टदल के नीचे लिखे हुए पाँच कोणों पर तिलक, फूल और अक्षत चढ़ाना) (वायव्य कोण पर गणेश को) **निषुसीद गणपते गणेषुत्वामाहुर्विप्रतमं कवीनाम्। न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवंश्चित्रमर्च॥** (नैर्ऋत कोण पर कुमार को) **कुमारं माता युवतिः समुब्धं गुहा विभर्ति न ददाति पित्रे। अनीकमस्य नमिमज्ञनासः पुरा पश्यन्ति निहितमरतौ॥** (ईशान कोण पर श्रिई को) **अश्वपूर्वां रथमध्यां हस्तिनाद-प्रमोदिनीम्। श्रियं देवीमुपह्वये श्रीर्मां देवी जुषताम्॥** (बीच में सरस्वती को) **इयं शुष्मेभिर्बिसखा इवारुजत्सानुर्गिरीणान्तर्विश्वेभिरूर्मिभिः। परावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमाविवासेम धीतिभिः॥** (बीच में ही लक्ष्मी को) **कांस्यस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम्॥** (आग्नेय कोण पर विश्वकर्मा को) **विश्वकर्मा विश्वदेवो विश्वजिद्विश्वदर्शितः। ते त्वा घृतस्य धारया श्रेष्ठाय समसूषत॥** अष्टदलस्थकुम्भे (कलशपात्र मैं और देवों को) **ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगानाम्। श्येनो गृद्ध्राणां**

स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन्॥ प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा॥ यो रुद्रो अग्नौ योऽप्सु य औषधीषु यो वनस्पतिषु। यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः॥ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम्॥ इषे त्वोर्जे त्वा वायवः स्थो, पायवः स्थ देवो वः सविता प्रार्पयत, श्रेष्ठतमाय कर्मणे॥ अग्न आयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि। शन्नो देवीरभीष्टय आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः॥ आहं पितॄन्सुविदत्रां अवित्सि न पातञ्च विक्रमणं च विष्णोः। बर्हिषदो ये सुधया सुतस्य भाजन्त पित्वस्त इहागमिष्ठाः॥ वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्। वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदानः॥ “फाल्गुणे” शक्तिसहिताय चक्रिणे नमः। क्रियासहिताय गोविन्दाय नमः॥ दुर्गायै नमः त्र्यम्बकाय नमः, वरुणाय नमः, यज्ञपुरुषाय नमः अग्निष्वात्ता दिभ्यः पितृगणदेवताभ्यो नमः॥ (प्रधानं) रात्रीं प्रपद्ये जननीं सर्वभूतनिवेशिनीम्। भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम्॥ संवेशिनीं संयमनीं ग्रहनक्षत्रमालिनीम्॥ प्रपन्नोहं शिवां रात्रीं भद्रे पारमशीमहिनमः। कालरात्र्यै नमः तालरात्र्यै

नमः राज्ञिरात्र्यै नमः शिवरात्र्यै नमः॥ यो रुद्रो अग्नौ य अप्सु य औषधीषु यो वनस्पतिषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु देवाः॥ क्षेत्रस्य पतिना वयं हितेनेव जयामसि गामश्वं पोषयित्वा स नो मृडातीदृशे॥

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

नमः समस्तशिवरात्रीयागदेवताभ्यो नमः तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दीवीव चक्षुराततम्॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम्॥ विष्णु पञ्चायतनदेवताभ्योनमः। अभयङ्करीदेव्यै नमः क्षेमङ्करीभगवत्यै नमः सर्वशत्रुघातिन्यै नमः इह राष्ट्राधिपतये अमुकभैरवाय नमः॥ यौ ते श्वानौ यमरक्षतारौ

चतुरक्षौ पथिरक्षी नृचक्षसौ। ताभ्यामेनं परिदेहिराजन्स्वस्ति चास्मा अनमीवञ्च धीहि॥ यत्र वेत्थ वनस्पते देवानां गुह्या नामानि तत्र हव्यानि गन्तय॥ मुञ्चामि वा हविषा जीवनायकमज्ञातयक्ष्मादुत राजयक्ष्मात्। ग्राहि जग्राह यदि वैतदनन्तस्या इन्द्राग्नी प्रमुमुक्तमेनम्॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि॥ यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते, विष्णोर्यत्परमं पदम्॥ ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्॥३॥ ऐन्द्राग्नं वर्म बहुलं यदुग्रं विश्वेदेवा नातिविध्यन्ति शूराः। तन्नस्त्रायतां तन्वः सर्वतो महदायुष्मन्तो जरामुपगच्छेम जीवाः॥ कलशेनैवेद्यम् (कलश के समीप एक कटोरी में तिल, अक्षत, दही, तथा शहद नैवेद्य के रूप में रखना) सावित्राणि सावित्रस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामादधे। महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपते नारायणाय “फाल्गुणे” शक्तिसहिताय चक्रिणे, क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय तिलतण्डुलमात्रं दधिमधुमिश्रं। ॐ नमो नैवेद्यं निवेदयामि नमः॥ कलशेपुष्पम् (कलश पर फूल और अक्षत चढ़ाना) हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥१॥ यः प्राणतो निमिषतश्च राजा पतिर्विश्वस्य जगतो बभूव। ईशेयो अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम॥२॥ य ओजदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः। यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम॥३॥ येन द्यौरुग्रा पृथिवी दृढा येन सुस्तम्भितं येन नाकम्। यो अन्तरिक्षं विममे वरीयः कस्मै देवाय

हविषा विधेम॥४॥ य इमे द्यावा पृथिवी तस्तभाने आधारय द्रोधसी रेजमाने। यस्मिन्नधि वितताः सूर एति कस्मै देवाय हविषा विधेम॥५॥ यस्येमे विश्वे गिरयो महित्वा समुद्रं यस्य रसया सहाहुः। दिशो यस्य प्रदिशः पञ्चदेवी कस्मै देवाय हविषा विधेम॥६॥ आपो ह यन्महती विश्वमायुर्गर्भं दधाना जनयन्तीर्ग्निम्। ततो देवानां निरवर्ततासुर् एकः कस्मै देवाय हविषा विधेम॥७॥ आ नः प्रजाञ्जनयतु प्रजापतिर्धाता दधातु सुमनस्यमानः। संवत्सर ऋतुभिश्वाक्लृपानो मयि पुष्टिं पुष्टिपतिर्दधातु॥८॥ अर्चन्तस्त्वा हवामहे अर्चन्तः समिधीमहि। अग्नेरर्चत ऊतये अर्चत प्रार्चत प्रियमेधसो अर्चत। अर्चन्तु पुत्रका उत पुरं न धृष्णमर्चत अर्चत अर्चत॥ इति कलशस्थापनम्॥



# अथ पूजाविधिः॥

**अथ यजमानमानीय।** नवयज्ञोपवीतधारयेत् (नया यज्ञोपवीत धारणा) **ॐ यज्ञोपवीतम् परमं पवित्रं प्रजापतेर्यतसहजं पुरुस्तात। आयुष्यं अग्र्यं प्रतिमुन्च शुभ्रं यज्ञोपवितम बलमस्तु तेजः॥ यज्ञोपवितमऽसि यज्ञ्यस्यत्वा उपवीतेन उपनह्यामि॥** आसनशोधनंकुर्यात् (पीठ पर सञिपतुल रखकर पानी छोडना) **ॐ अस्य श्री आसन शोधन मन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसन शोधने विनियोगः।** विनियोगन्यासः (स्पर्श करना) **मेरुपृष्ठ ऋषिः नमः शिरसि (**सिर को**) सुतलं छन्दसे नमः मुखे (**मुख को**) कूर्मो देवताय नमः हृदि (**हृदय को**) आसन शोधने विनियोगाय नमः सर्वांगेषु (**सारे शरीर को**)॥** स्वासने दर्भद्वयम् (दर्भ के दो तिनके भूमि को आसन छोडना) **ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि॥** गन्धार्घपुष्पाणि (भूमि को तिलक, अर्घ और पुष्प चढ़ाना) **प्रीम पृथिव्यै आधारशक्त्यै समालभनं गन्धो नमः अर्घो नमः पुष्पं नमः॥** (दोनों हाथ जोड़कर माँगना) **पृथ्वी त्वया धृता लोका देवि त्वं विष्णुना धृता। त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥** (अब इष्टदेव का स्मरणपूर्वक नमस्कार करना) **शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम्। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये। अभिप्रेतार्थसिद्ध्यर्थं पूजितो यः सुरैरपि सर्वविघ्नच्छिदे तस्मै श्रीगणाधिपतये नमः॥ कर्पूरगौरं करुणावतारं**

संसारसारं भुजगेन्द्रहारम्। सदा रमन्तं हृदयारविन्दे भवं भवानीसहितं नमामि॥ गुरुर्ब्रह्मा गुरुर्विष्णु गुरुः साक्षात्महेश्वरः। गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः॥ श्रीगुरवे नमः, परमगुरवे नमः, परमेष्ठिने गुरवे नमः, परमाचार्याय नमः, आद्यसिद्धेभ्यो नमः॥ (न्यास करना) अ नाभौ (नाभिस्थान को हाथों से छूना) उ हृदि (हृदय को) म शिरसि (सिर को)। भूः पादयोः (पैरों को) भुवः हृदि (हृदय को) स्वः शिरसि (सिर को) भूरङ्गुष्ठाभ्यां नमः (अंगूठों को) भुवस्तर्जनीभ्यां नमः (पहली उँगली को) स्वर्मध्यमाभ्यां नमः (दूसरी उँगली को) महः अनामिकाभ्यां नमः (तीसरी उँगली को) जनः कनिष्ठिकाभ्यां नमः (आखिरी उँगली को) तपः सत्यं करतलकरपृष्ठाभ्यां नमः (हाथों के दोनों तले और दोनों पीठ भी मिलाना) भूः पादयोः (पैरों को) भुवः जान्वोः (घुटनों को) स्वः गुह्ये (गुदा को) महः नाभौ (नाभी को) जनः हृदि (हृदय को) तपः कण्ठे (गले को) सत्यं शिरसि (सिर को)॥ भूः हृदयाय नमः (हृदय को) भुवः शिरसे स्वाहा (सिर को) स्वः शिखायै वषट् (शिखा को) महः कवाचाय हुं (बायाँ हाथ दाएँ कान के आगे और दायाँ हाथ बाएँ कान के आगे रखना) जनः नेत्राभ्यां वौषट् (आखों को) तपः सत्यमस्त्राय फट् (सिर के ईर्द गिर्द तीन चुटकी मारना)॥ तत्सवितुरङ्गुष्ठाभ्यां नमः (अंगूठों को)। वरेण्यं तर्जनीभ्यां नमः (पहली उँगली को)। भर्गो देवस्य मध्यमाभ्यां नमः (दूसरी उँगली को)। धीमहि अनामिकाभ्यां नमः (तीसरी उँगली को)। धियो योनः कनिष्ठिकाभ्यां नमः (आखिरी उँगली को)। प्रचोदयात्करतलकरपृष्ठाभ्यां नमः (हाथों के दोनों तले और दोनों पीठ भी

मिलाना)। तत्पादयोः (पैरों को) सवितुर्जान्वोः (घुटनों को)॥ वरेण्यं कट्यां (कमर को) भर्गो नाभौ (नाभि को) ॥ देवस्य हृदये (हृदय को)। धीमहि कण्ठे (गले को)॥ धियो नासिकायां (नासिकाओ को)। यश्चक्षुषे (आखों को)॥ नः ललाटे (माथे को)। प्रचोदयाच्छिरसि (सिर को)॥ तत्सवितुर्हृदयाय नमः (हृदय को)। वरेण्यं शिरसे स्वाहा (सिर को)॥ भर्गो देवस्य शिखायै वषट् (चोटी को)। धीमहि कवचाय हुं (बायाँ हाथ दाएँ कान के आगे और दायाँ हाथ बाएँ कान के आगे रखना)॥ धियो योनः नेत्राभ्यां वौषट् (नेत्रों को) प्रचोदयादस्त्राय फट् (सिर के ईर्द गिर्द तीन चुटकियाँ मारना)॥ आपः स्तनयोः (स्तनों को)। ज्योतिर्नेत्रयोः (नेत्रों को)॥ रसो मुखे (मुख को)। अमृतं ललाटे (माथे को)। ब्रह्मभूर्भुवः स्वरों शिरसि (सिर को)॥ यो रुद्रो अग्नौ, हृदयाय नमः (हृदय को)॥ यो अप्सु य ओषधीषु, शिरसे स्वाहा (सिर को)। यो वनस्पतिषु, शिखायै वषट् (चोटी को)॥ यो रुद्रो विश्वा भुवना विवेश, कवचाय हुँ (बायाँ हाथ दाएँ कान के आगे और दायाँ हाथ बाएँ कान के आगे रखना)। तस्मै रुद्राय, नेत्राभ्यां वौषट् (नेत्रों को)॥ नमो अस्तु देवा, अस्त्राय फट् (सिर के इर्द गिर्द ३ चुटकियाँ मारना) इत्यादिन्यासः॥ सर्वासु दिक्षु तिलान्विक्षपन् (चारों तरफ तिल फैंकना) अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः। ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया॥ (प्राणायाम करना) ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो योनः प्रचोदयात्। ॐ आपो ज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोम्॥ (पैरों और मुंह को पानी की छींटें देना) तीर्थे स्नेयं तीर्थमेव समानानां भवति मानः

**शंस्यो अरुरुषो धूर्तिः प्राणङ्मर्त्यस्य रक्षाणो ब्रह्मणस्पते॥** (अनामिका उँगली में पवित्र धारणा) **वसोः पवित्रमसि शतधारं वसूनां पवित्रमसि सहस्रधारमयक्ष्मा वः प्रजया संसृजामि रायस्पोषेण बहुला भवन्ति** (इति पवित्रधारणम्)॥ शकुनायनम् (शकुन सहित आशीर्वाद देना) **यावदिन्द्रादयो देवा यावश्चन्द्रदिवाकरौ। यावद्रामकथा लोके भूयात्तावत्स्थितिस्तव॥** यजमान तथा घर के सभी सदस्यों को तिलक लगाना: **मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः शत्रूणां बुद्धि नाशोस्तु मित्राणामुदयस्तव आयुरारोग्य-मैश्वर्यम् एतत् त्रितयम् अस्तु ते जीवत्वं शरदः शतम्॥** (रक्षासूत्र बँधवाना) **यदाबन्धन्दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमानः। तन्म आबध्नामि शतशारदायाऽयुष्माञ्जरदष्टिर्यथासत्॥ रक्षस्व मे केशवः सविता सत्यधर्मा रक्षस्व मे केशवः प्राणधनानि यानि। रक्षस्व मे केशवश्चोभयलोकवीरं शंनो भवतु मे द्विपदे शं चतुष्पदे॥ रक्षाणो ब्रह्मणस्पते॥** (अपने आप को तिलक, पुष्प और अर्ध लगाना) **परमात्मने पुरुषोत्तमाय पञ्चभूतात्मकाय विश्वात्मने मन्त्रनाथाय आत्मने नारायणाय आधारशक्त्यै समालभनं गन्धो नमः। अर्घो नमः। पुष्पं नमः** (इति स्वात्मने गन्धादि)॥ (दिये को तिलक, अक्षत और फूल चढ़ाना) **स्वप्रकाशो महादीपः सर्वतस्तिमिरापहः। प्रसीद मम गोविन्द दीपोयं परिकल्पितः।** (धूप को) **वनस्पतिरसो दिव्यो गन्धाढ्यो गन्धवत्तमः। आधारः सर्वदेवानां धूपोयं परिकल्पितः॥** (सूर्य देवता को न्यर्माल के पात्र में)

**नमो धर्मनिधानाय नमः स्वकृतसाक्षिणे। नमः प्रत्यक्षदेवाय भास्कराय नमो नमः॥** अथार्घविष्टरजलेनसंकलपात् (अर्घ व विष्टर समेत पानी से संकल्प छोड़ना) **यत्रास्ति माता न पिता न बन्धुर्भ्रातापि नोयत्र सुहृज्जनश्च। न ज्ञायते यत्र दिनं न रात्रिस्तत्रात्मदीपं शरणं प्रपद्ये॥ आत्मने नारायणाय आधारशक्त्यै दीपधूपसङ्कल्पात्सिद्धिरस्तु दीपोनमः धूपोनमः॥ तत्सद्ब्रह्म अद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां _वारान्वितायां महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ॠतुपते नारायणाय "फाल्गुणे" शक्तिसहिताय चक्रिणे, क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ॠते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय तेजाय **मध्ये** राजराजेश्वराय चण्डाय

**समस्तशिवरात्रीदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करीदेव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय आत्मने वाङ्गमनः कायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तं दीपधूपासंकल्पसिद्धिरस्तु दीपोनमः धूपोनमः॥** अपसव्येन (बायाँ जनेऊ रखकर तिल समेत तर्पण करना) **नमः पितृभ्यः प्रेतेभ्यो नमः धर्माय विष्णवे। नमो यमाय रुद्राय कान्तारपतये नमः॥३॥ तत्सद्ब्रह्मऽद्यतावत्तिथावद्य फाल्गुन-मासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां __वारान्वितायां॥ पित्रे(***नाम सहित गोत्र**) पितामहाय* प्रपितामहाय*। मात्रे* पितामह्यै* प्रपितामह्यै*॥ मातामहाय* प्रमातामहाय* वृद्धप्रमातामहाय*। मातामह्यै* प्रमातामह्यै* वृद्धप्रमातामह्यै*। समस्तमातापितृभ्यो द्वादशदैवतेभ्यः पितृभ्यः शिवरात्रीव्रतनिमित्तं दीपःस्वधा धूपःस्वधा॥** सव्येन (दायाँ जनेऊ रखकर तिल, अक्षत, पुष्प, पानी और विष्टर युक्त प्रणीतपात्र में तिलक और ३ मंत्रों से ३ फूल डालना) **संव्वः सृजामि हृदयं संसृष्टं मनो अस्तु वः॥१॥ संसृष्टास्तन्वः सन्तु वः संसृष्टः प्राणो अस्तु वः॥२॥ संय्या वः प्रियास्तन्वः संप्रिया हृदयानि वः। आत्मा वो अस्तु सं प्रियः संप्रियास्तन्वो मम॥३॥** (इसी प्रणीतपात्र के जल से सभी देवों को जीवादान देना) **अश्विनोः प्राणस्तौ ते प्राणन्दत्तां तेन जीव मित्रावरुणयोः प्राणस्तौ ते**

प्राणन्दत्तां तेन जीव बृहस्पतेः प्राणः स ते प्राणन्दत्तात्तेन जीव॥ (इति तिलाक्षतविष्टरयुतौ पुष्पत्रयंजलपात्रे क्षिप्त्वा, अश्विनोरिति देवस्य जीवादानं देयम्॥ देवस्य देहवन् न्यासं कुर्यात् (देवताओं को दर्भ के दो तिनकों से चामर सा न्यास करना) अ नाभौ, उ हृदि, म शिरसि। भूः पादयोः, भुवः हृदि, स्वः शिरसि, भूरङ्गुष्ठाभ्यां नमः, भुवस्तर्जनीभ्यां नमः, स्वर्मध्यमाभ्यां नमः, महः अनामिकाभ्यां नमः, जनः कनिष्ठिकाभ्यां नमः, तपः सत्यं करतलकरपृष्ठाभ्यां नमः, भूः पादयोः, भुवः जान्वोः, स्वः गुह्ये, महः नाभौ, जनः हृदि, तपः कण्ठे, सत्यं शिरसि॥ भूः हृदयाय नमः, भुवः शिरसे स्वाहा, स्वः शिखायै वषट्, महः कवाचाय हुं, जनः नेत्राभ्यां वौषट्, तपः सत्यमस्त्राय फट्॥ तत्सवितुरङ्गुष्ठाभ्यां नमः। वरेण्यं तर्जनीभ्यां नमः। भर्गो देवस्य मध्यमाभ्यां नमः। धीमहि अनामिकाभ्यां नमः। धियो योनः कनिष्ठिकाभ्यां नमः। प्रचोदयात्करतलकरपृष्ठाभ्यां नमः। तत्पादयोः। सवितुर्जान्वोः॥ वरेण्यं कट्याँ। भर्गो नाभौ॥ देवस्य हृदये। धीमहि कण्ठे॥ धियो नासिकायां। यश्चक्षुषे॥ नः ललाटे। प्रचोदयाच्छिरसि॥ तत्सवितुर्हृदयाय नमः। वरेण्यं शिरसे स्वाहा॥ भर्गो देवस्य शिखायै वषट्। धीमहि कवचाय हुं॥ धियो योनः नेत्राभ्यां वौषट्। प्रचोदयादस्त्राय फट्॥ आपः स्तनयोः। ज्योतिर्नेत्रयोः॥ रसो मुखे। अमृतं ललाटे। ब्रह्मभूर्भुवः स्वरों शिरसि॥ यो रुद्रो अग्नौ, हृदयाय नमः॥ यो अप्सु य ओषधीषु, शिरसे स्वाहा । यो वनस्पतिषु, शिखायै वषट्॥ यो रुद्रो विश्वा भुवना विवेश, कवचाय हुँ। तस्मै रुद्राय,

नेत्राभ्यां वौषट्॥ नमो अस्तु देवा, अस्त्राय फट्॥ अक्षतयुतौद्वदर्भेणदैवाज्ञा (अक्षत युक्त दर्भ के दो तिनके हाथ में रखकर देवताओं से पूजा की आज्ञा लेना) ॐभूः पुरुषमावाहयामि नमः। ॐभुवः पुरुषमावाहयामि नमः। ॐस्वः पुरुषमावाहयामि नमः। ॐ भूर्भुवः स्वः पुरुषमावाहयामि नमः॥३॥ ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि, धियो यो नः प्रचोदयात्॥३॥ ॐ ह्रीं श्रीं देवीपुत्राय विद्महे क्षेत्रेशमुख्यायधीमहि द्वादश्यां त्रयोदश्यां तन्नः हेरकभैरवः वटुकभैरवः प्रचोदयात्॥३॥ ॐतत्सद्ब्रह्म-ऽद्यतावत्तिथावद्य फाल्गुनमासस्य कृष्णपक्षस्य तिथौ त्रयोदश्यां __वारान्वितायां महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपते-नारायणस्य “फाल्गुणे” शक्तिसहितस्य चक्रिणः क्रियासहितस्य गोवीन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य अग्निष्वातादीनां पितृगणयागदेवदीनां कालरात्र्याः तालरात्र्याः राज्ञिरात्र्याः शिवरात्र्याः

| | | | | | |
|---|---|---|---|---|---|
| द्वादश्यां | **पूर्वे** देवीपुत्रहेरकनाथस्य | **आग्नेये** | त्रिपुरान्तकस्य | **दक्षिणे** | वेतालराजस्य |
| त्रयोदश्यां | देवीपुत्रवटुकनाथस्य | | भूतबलानां | | अग्नि वेतालराजस्य |

| | | | | | |
|---|---|---|---|---|---|
| **नैर्ऋते** | अग्निजिह्वस्य | **पश्चिमे** | करालस्य | **वायवे** | कामाख्यस्य |
| | बहुखातकेश्वरस्य | | स्थानक्षेत्रपालस | | मंगलराजस्य |

**उत्तरे** एकपादस्य **ईशाने** भीमरूपिणः **ऊर्ध्वे** तारकाख्याय
योगिनीबलानां विश्वक्सेनस्य जयक्सेनस्य

**पाताले** हाटकेश्वरस्य **मध्ये** राजराजेश्वरस्य
तेजस्य चण्डस्य

**समस्तशिवरात्रीयागदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करी-देव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतयेः अमुकभैरवस्य आत्मने वाङ्गमनः कायोपार्जितपापनिवारणार्थं शिवरात्रीव्रतनिमित्तं कलशपूजनं शिवरात्रीयागपूजनमर्चामहं करिष्ये ॐ कुरुष्व॥** तिलसर्षपयवान्विकीर्य (तिल, सर्षप और जव चारों तरफ फेंकके, देवों को आसन के रूप में दर्भ के दो तिनके छोडना) **मृडा नो रुद्रो तनो मयस्कृधि क्षयद्वीराय नमसा विधेम ते। यच्छञ्च योश्च मनुराजेये पिता तदश्याम तव रुद्र प्रणीतिषु॥ ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे। ध्रुवं विश्वमिदं जगद्ध्रुवो राजा विशामसि॥ महागणपतेः कुमारस्य श्रियः सरस्वत्याः लक्ष्म्याः विश्वकर्मणः द्वार्देवतानां प्रजापतयेः ब्रह्मणः कलशदेवतानां ब्रह्मविष्णुमहेश्वरदेवतानां चातुर्वेदेश्वरस्य सानुचरस्य ऋतुपतेः नारायणस्य “फाल्गुणे” शक्तिसहितस्य चक्रिणेः क्रियासहितस्य गोवीन्दस्य दुर्गायाः त्र्यम्बकस्य वरुणस्य यज्ञपुरुषस्य**

**अग्निष्वातादीनां पितृगणयागदेवतानां कालरात्र्याः तालरात्र्याः राज्ञिरात्र्याः शिवरात्र्याः**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथस्य **आग्नेये** त्रिपुरान्तकस्य **दक्षिणे** वेतालराजस्य
त्रयोदश्यां देवीपुत्रवटुकनाथस्य भूतबलानां अग्नि वेतालराजस्य

**नैर्ऋते** अग्निजह्वस्य **पश्चिमे** करालस्य **वायवे** कामाख्यस्य
बहुखातकेश्वरस्य स्थानक्षेत्रपालस्य मंगलराजस्य

**उत्तरे** एकपादस्य **ईशाने** भीमरूपिणः **ऊर्ध्वे** तारकाख्याय
योगिनीबलानां विश्वक्सेनस्य जयक्सेनस्य

**पाताले** हाटकेश्वरस्य **मध्ये** राजराजेश्वरस्य
तेजस्य चण्डस्य

**समस्तशिवरात्रीयागदेवतानां विष्णुपञ्चायतनदेवतानां अभयङ्करी-देव्याः क्षेमङ्करीभवान्याः सर्वशत्रुघातिन्याः इह राष्ट्राधिपतयेः अमुकभैरवस्य इदमासनं नमः**(इत्यदर्भद्वयासनम्)॥ अथाक्षतयुतौद्वदर्भेणदैवावाहनम् (अक्षत समेत दर्भ के दो तिनके हाथ में रखकर देवों का आवाहन करना) **महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय “फाल्गुणे” शक्तिसहिताय चक्रिणे,**

**क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपाला मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

**समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय यूष्मान् वः पूजयामि ॐ पूजय॥** नवीनाक्षतयुतौद्वदर्भेण निम्नमंत्रपठेत् (दर्भ के तिनके हाथ में ही रखकर, अक्षत कन्धों से फेंककर, नए अक्षत हाथ में लेकर पढ़ना) **इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्रभरामहे मतीः। यथा नः शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम्॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्॥**

महागणपतिं कुमारं श्रियं सरस्वतीं लक्ष्मीं विश्वकर्मणं द्वार्देवताः प्रजापतिं ब्रह्मणं कलशदेवताः ब्रह्मविष्णुमहेश्वरदेवताः चातुर्वेदेश्वरं सानुचरं ऋतुपतिं नारायणं “फाल्गुणे” शक्तिसहितं चक्रिणं क्रियासहितं गोवीन्दं दुर्गां त्र्यम्बकं वरुणं यज्ञपुरुषं अग्निष्वातादीः पितृगणयागदेवताः कालरात्रीं तालरात्रीं राज्ञिरात्रीं शिवरात्रीं

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथं **आग्नेये** त्रिपुरान्तकं **दक्षिणे** वेतालराजं

त्रयोदश्यां देवीपुत्रवटुकनाथं भूतबलान् अग्नि वेतालराजायं

**नैर्ऋते** अग्निजह्वं **पश्चिमे** करालं **वायवे** कामाख्यं

बहुखातकेश्वरं स्थानक्षेत्रपालं मंगलराजायं

**उत्तरे** एकपादं **ईशाने** भीमरूपिणं **ऊर्ध्वे** तारकाख्यं

योगिनीबलान् विश्वक्सेनं जयक्सेनं

**पाताले** हाटकेश्वरं **मध्ये** राजराजेश्वरं

तेजं चण्डं

समस्तशिवरात्रीयागदेवताः विष्णुपञ्चायतनदेवताः अभयङ्करीदेवीं क्षेमङ्करीभवानीं सर्वशत्रुघातिनीं इह राष्ट्राधिपतिं अमुकभैरवं आवाहयिष्यामि ॐ आवाहय॥ (“बबरकाठ” के फूलों से आवाहन करना) (द्वादशी दिन के भैरवों का आवाहन) आवाहयामि देवेशं हेरकं भैरवेश्वरम्। उग्रदंष्ट्रं भीमरूपं पूर्वस्यां विघ्नहारकम्॥ “पूर्वे” हेरकाय नमः॥ आवाहयामि भूतेशं

त्रिपुरान्तकभैरवम्। त्रिनेत्रं भीमकर्माणमाग्नेये विघ्ननाशकम्॥ "आग्नेये" त्रिपुरान्तकाय नमः॥ आवाहयामि विश्वेशं वेतालमतिभैरवम्। हयारूढं वृतं वीरैर्दक्षिणे दुःखहारकम्॥ "दक्षिणे" वेतालराजाय नमः॥ आवाहयामि वीरेशमऽग्निजिह्वं शवासनम्। भूतसङ्गानुगं भीमं नैर्ऋते विघ्नभक्ष्यकम्॥ "नैर्ऋते" अग्निजिह्वाय नमः॥ आवाहयामि श्रीकण्ठं करालं भैरवाकृतिम्। करालवदनं घोरं पश्चिमे कृतमङ्गलम्॥ "पश्चिमे" करालाय नमः॥ आवाहयामि कामाख्यं भैरवेशं शवासनम् भक्ताभीष्टकरं क्रूरं वायवेऽतिसुखप्रदम्॥ "वायवे" कामाख्याय नमः॥ आवाहयामि एकपादभैरवं सिंहवाहनम्। त्र्यक्षं पिङ्गलकेशाढ्यमुत्तरे भयनाशनम्॥ "उत्तरे" एकपादाय नमः॥ आवाहयामि प्रेताढ्यं भीमरूपिणमीश्वरम्। खड्गकपालमालाढ्य-मीशाने सौख्यदं नृणाम्॥ "ईशाने" भीमरूपिणे नमः॥ आवाहयामि भूताढ्यं तारकाख्यंहि भैरवम्। उग्ररूपधरं भीममाकाशे भयनाशकम्॥ "ऊर्ध्वे" तारकाख्याय नमः॥ आवाहयामि देवेन्द्रं हाटकेश्वरभैरवम्। भक्ताभीष्टकरं त्र्यक्षं पाताले भयकृन्तनम्॥ "पाताले" हाटकेश्वराय नमः॥ आवाहयामि घोरास्यं राजराजेश्वरं प्रभुम्॥ यक्षरक्षोगणैः सेव्यं मध्ये भीतिहरं नृणाम्॥ "मध्ये" राजराजेश्वराय नमः॥ (त्रयोदशी दिन के भैरवों का आवाहन) कुलाकुलपदे योसौ पालको भूतविग्रहः। चिदानन्दरसपूर्णं वन्दे वटुकभैरवम्॥ नृत्यन्तं भुजयुगलेन दत्ततालं पञ्चास्यं दहनपतङ्ग-कोटिभासम्। सत्पात्रद्विजक खगचर्महस्तं वीरेशं वटुकमभीष्टदं प्रपद्ये॥ "पूर्वे" वटुकाय नमः॥ आवाहयामि चाग्नेये भूतबलगणं विभुम्। शवासनं

रसभुजं भक्ताभयवरप्रदम्॥ "आग्नेये" भूतबलेभ्यो नमः॥ आवाहयामि वक्रैकमग्निवेतालभैरवम्। खरकर्णं विशालाक्षं दक्षिणे विघ्नहारिणम्॥ "दक्षिणे" अभिवेतालराजाय नमः॥ आवाहयामि नैर्ऋत्यां त्वां बहुखातकेश्वरम्। उग्रदंष्ट्रं महौजस्कमष्टबाहुं शवासनम्। "नैर्ऋते" बहुखातकेश्वराय नमः॥ आवाहयामि वारुण्यां त्वां स्थानक्षेत्रपालकम्। त्रिलोचनं पञ्चवक्रं मुण्डखड्गाद्युदायुधम्। "पश्चिमे" स्थानक्षेत्रपालाय नमः॥ आवाहयामि मङ्गलेशानं पञ्चवक्रं कपालिनम्। षड्भुज रक्तवर्णं त्वां वायवे सिद्धिदं विभुम्। "वायव्ये" मङ्गलराजाय नमः॥ आवाहयामि योगिनीबलवृन्दं तं प्रपद्येऽहं चतुर्भुजम्। उत्तरे योगिनीयुक्तं नृत्यगीतप्रियं प्रभुम्। "उत्तरे" योगिनीभलेभ्यो नमः॥ आवाहयामि विष्वक्सेनं प्रपद्येहं पञ्चवक्रं भयानकम्। अष्टबाहुं दीर्घनासमैशान्यां सिद्धिदायकम्। "ईशाने" विष्वक्सेनाय नमः॥ आवाहयामि जयक्सेनं प्रपन्नोहं त्रिनेत्रं सूकराननम्। आकाशे विघ्नभीतिघ्नं प्रेतासनकृतस्थितिम्। "ऊर्ध्वे" जयक्सेनाय नमः॥ आवाहयामि पाताले स्वामिनं तेजभैरवम्। त्रिनेत्रं प्रेतमध्यस्थं नानायुधविराजितम्। "पाताले" तेजाय नमः॥ आवायाम्यहं मध्ये चण्डं चण्डेश्वरं विभुम्। सप्तवक्रं विंशभुजं भक्ताभीष्टाभयप्रदम्। "मध्ये" चण्डाय नमः॥ भगवन्पुण्डरीकाक्ष भक्तानुग्रहकारक। अस्मद्दयानुरोधेन सन्निधानं कुरु प्रभो॥३॥ इत्याहूय तु गायत्रीं त्रिः समुच्चार्य तत्ववित्। मनसा चिन्तितैर्द्रव्यैर्देवमात्मनि पूजयेत्। तेजोरूपं ततः क्षिप्त्वा प्रतिमायां पुनर्यजेत्॥ यवान्विकीर्य, प्राणायामं कुर्यात् (चारों तरफ जव फैकके प्राणायाम करना) पाद्यार्थमुदकं नमः॥ (पात्र का पानी

हाथ में लेकर वापिस उसी पात्र में छोड़ना) **शन्नो देवीरभीष्टये आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः॥** (उस पात्र में लाय, तिलक, सर्वोषधी, विष्टर और पानी छोड़ना) **लाजाश्च कुङ्कुमं चैव सर्वौषधिसमन्वितम्। दर्भाङ्कुरं जलं चैव पञ्चाङ्गं पाद्यलक्षणम्॥** (इस पात्र को हाथों से उठाना) **भगवन्तः पाद्यंपाद्यं॥** (फिर सन्निपतुल पर जलधारा डालते हुए पाद्य देना) **हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्विद्रः। या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु॥१॥ यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम्। या अग्निं गर्भं दधिरे विरूपास्ता न आपः शं स्योना भवन्तु॥२॥ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। या अग्निं गर्भं दधिरे विरूपास्ता न आपः शंस्योना भवन्तु॥३॥ शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोपस्पृशत त्वचं मे। घृतश्चुतः शुचयो याः पावकास्ता न आपः शंस्योना भवन्तु॥४॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुणे" शक्तिसहिताय चक्रिणे क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

**समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय पाद्यंनमः॥** पाद्यशेषं निवार्येत् (पाद्य का शेष सञिपतुल पर छोड़कर, इस पात्र में नया पानी लेकर, पात्र से हाथ में पानी लेकर वापिस पात्र में डालना) **पुनः। शन्नो देवीरभीष्टये आपो भवन्तु पीतये, शंय्योरभिस्रवन्तु नः॥** (अब इसी पात्र में पानी, दूध, विष्टर, घी, दही, अक्षत, जव तथा सर्षप डालना) **आपः क्षीरं कुशाग्राणि घृतं च दधि तण्डुलाः॥ यवाः सिद्धार्थकाश्चेति ह्यर्घयमष्टाङ्गमुच्यते॥ भगवन्तः अर्घ्यमऽर्घ्यम्।** (फिर सञिपतुल पर जलधारा डालते हुए अर्घ्य देना) **त्वेषं वयं रुद्रं यज्ञं साधनमऽङ्कुङ्कविमवसे निह्वयामहे। आरे अस्मद्दैव्यं हेडो अस्यतु सुमतिमिद्वयमऽस्या वृणीमहे॥ आपो हिष्ठा मयोभुनस्तान**

ऊर्जे दधातन, महे रणाय चक्षसे। यो वः शिवतमो रसस्तस्य भाजयते हनः, उशतीरिव मातरः॥ तस्मा अरङ्गमाम वोयस्य क्षयाय जिन्वथ, आपो जनयथा च नः। महागणपते कुमार श्रीः सरस्वति लक्ष्मीः विश्वकर्मन् द्वार्देवताः प्रजापते ब्रह्मण, कलशदेवताः ब्रह्मविष्णु-महेश्वरदेवताः चातुर्वेदेश्वर सानुचर ऋतुपते नारायण “फाल्गुणे” शक्तिसहित चक्रिन्, क्रियासहित गोविन्द दुर्गे त्र्यम्बक वरुण यज्ञपुरुष अग्निष्वातादयः पितृगणयागदेवताः कालरात्रि तालरात्रि राज्ञिरात्रि शिवरात्रि

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथ **आग्नेये** त्रिपुरान्तक **दक्षिणे** वेतालराज

त्रयोदश्यां देवीपुत्रवटुकनाथ भूतबलाः अग्नि वेतालराज

**नैर्ऋते** अग्निजह्व **पश्चिमे** कराल **वायवे** कामाख्य

बहुखातकेश्वर स्थानक्षेत्रपाल मंगलराज

**उत्तरे** एकपाद **ईशाने** भीमरूपिण **ऊर्ध्वे** तारकाख्य

योगिनीबलाः विश्वक्सेन जयक्सेन

**पाताले** हाटकेश्वर **मध्ये** राजराजेश्वर

तेज चण्ड

समस्तशिवरात्रीयागदेवताः विष्णुपञ्चायतनदेवताः अभयङ्करीदेवी क्षेमङ्करीभवानी सर्वशत्रुघातिनी इह राष्ट्राधिपते अमुकभैरव इदं वः

**अर्घ्यं नमः॥** शेषं निवार्येत्, शुद्धजलेन आचमनीयं (साफ पानी से आचमन देना) **दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा निह्वयामहे। हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं वयं सत्॥ शन्न आपो धन्वन्याः शन्नः सन्त्वनूप्याः। शन्नः समुद्रिया आपः शमु नः सन्तु कूप्याः॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुणे" शक्तिसहिताय चक्रिणे क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

**समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय आचमनीयं जलं नमः॥** शुद्धजलेन मंत्रस्नानानि (साफ पानी से मंत्र स्नान कराना) **इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम्। रास्वाचनो अमृत मर्त्यभोजनं त्मने तोकाय तनयाय मृड॥ इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि। यद्वाहमभिदुद्रोह यद्वाशेष उतानृतम्॥ महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वरदेवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुणे" शक्तिसहिताय चक्रिणे क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

| द्वादश्यां | **पूर्वे** | देवीपुत्रहेरकनाथाय | **आग्नेये** | त्रिपुरान्तकाय | **दक्षिणे** | वेतालराजाय |
|---|---|---|---|---|---|---|
| त्रयोदश्यां | | देवीपुत्रवटुकनाथाय | | भूतबलेभ्यः | | अग्नि वेतालराजाय |

| **नैर्ऋते** | अग्निजह्वाय | **पश्चिमे** | करालाय | **वायवे** | कामाख्याय |
|---|---|---|---|---|---|
| | बहुखातकेश्वराय | | स्थानक्षेत्रपालाय | | मंगलराजाय |

| **उत्तरे** | एकपादाय | **ईशाने** | भीमरूपिणे | **ऊर्ध्वे** | तारकाख्याय |
|---|---|---|---|---|---|
| | योगिनीबलेभ्यः | | विश्वक्सेनाय | | जयक्सेनाय |

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

**समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय मंत्रस्नानीयं नमः॥** (पानी, दूध, दही, घी, शहद, लाय, सर्षप, तिल, जव, अक्षत, दर्भ, द्रमुन, मिट्टी, भस्म, मेवा, शक्कर, पञ्चामृत, पञ्चगव्य, कर्पूर, सर्वौषधी, तिलक और फूल, इन २१ द्रव्यों को इक्ट्ठा करना) **पयोदधिघृतक्षौद्रलाजासिद्धार्थकास्तिलाः। यवव्रीहिकुशादूर्वामृद्भस्मफलशर्कराः। पञ्चामृतं पञ्चगव्यं कर्पूरौषधय-स्तथा। एकविंशतिस्नानानि गन्धाद्भिःकुसुमैरपि॥** (इनसे अभिषेक करना) **(**पानी**) उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम श्रथाय। अथावयं अथादित्यव्रते तवानागसो अदितये स्याम॥ (**दूध**) पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम्॥ (**दही**) दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः। सुरभि नो मुखाकरत्प्रण आयूषि तारिषत्॥ (**घी**) घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्मणा विष्कम्भिते अजरे भुरिरेतसा॥ (**शहद**) मधुवाता ऋतायते मधुंक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः। मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः। मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमान् अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः॥ (**लाय**) तदस्य रूपममृतं शचीभिस्तिस्रो दधुर्देवताः संरराणाः। लोमानि शष्पैर् बहुधा न तोक्मभिस्त्वगस्य मांसमभवन् न**

लाजाः॥ (सर्षप) रक्षोहणं वाजिनमाजिधर्मि मित्रं प्रथिष्ठमुपयामि शर्म। शिशानो अग्निः क्रतुभिः समृद्धः स नोदिवः सरिषः पातु नक्तम्॥ (तिल) तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रयत्नवद्भिः पितॄल्लोकान्प्राण आयाहि नः स्वधा॥ (जव) यवोसि यवयास्मद्विपं यावया रातिम्। पितृपदनं खा लोकमास्तृणामि॥ (अक्षत) धान्यमसिधिनोहि देवान्धिनोहि यज्ञंधिनोहि यज्ञपर्तिंधिनोहि मां यज्ञम्॥ (दर्भ) देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामादधे॥ (द्रमुन) काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दुर्वे प्रतनु सहस्रेण शतेन च॥ (मिट्टी) आक्रम्य वाजिन्पृथिवीमग्निमिच्छा रुचात्वम्। भूम्यायत्वायनो ब्रूहि यतः खनेम ते वयम्॥ (भस्म) प्रसद्य भस्मना योनिमपश्च पृथिवीग्नेः। संसृज्य मातृभिष्ट्वं ज्यो तिष्मान्पुनरासदः॥ (मेवा) याः फलिनीर्या अफला अकोशाः कोशिनीश्च याः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वंहसः॥ (शर्कर) शर्कराभिरवकामऽवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुं सरस्वती जिह्वाग्रेण॥ (घी, दही, तिल, जव और शक्कर रूपी पञ्चामृत से) पञ्चव्युष्टीरनुपञ्च दुहा गां पञ्चनाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभिलोकमेम्॥ (पञ्चगव्य) गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्। निर्दिष्टं पञ्चगव्यं तु पवित्रं कायशोधनम्। मिश्रीकृत्य। समुद्रादुर्मिर्मधुमा उदारदुर्पाशुना समऽमृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानामऽमृतस्य नाभिम्॥ (कपूर) त्र्यम्बकं

**यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनात्मृत्योर्मुक्षीय मामृतात्॥ (सर्वौषधी)। या ओषधयः प्रथमजा देवेभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणामहं शतं धामानि सप्त च॥ (तिलक) गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्॥ (फूल) पुष्पवतीः प्रसुमतीः फलिनीरफला उत। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः। महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्मणे द्वार्देवताभ्यः प्रजापतये ब्रह्मणे, कलशदेवताभ्यः ब्रह्मविष्णुमहेश्वर-देवताभ्यः चातुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय "फाल्गुणे" शक्तिसहिताय चक्रिणे, क्रियासहिताय गोवीन्दाय दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वातादिभ्यः पितृगणयागदेवताभ्यः कालरात्र्यै तालरात्र्यै राज्ञिरात्र्यै शिवरात्र्यै**

द्वादश्यां **पूर्वे** देवीपुत्रहेरकनाथाय **आग्नेये** त्रिपुरान्तकाय **दक्षिणे** वेतालराजाय

त्रयोदश्यां देवीपुत्रवटुकनाथाय भूतबलेभ्यः अग्नि वेतालराजाय

**नैर्ऋते** अग्निजह्वाय **पश्चिमे** करालाय **वायवे** कामाख्याय

बहुखातकेश्वराय स्थानक्षेत्रपालाय मंगलराजाय

**उत्तरे** एकपादाय **ईशाने** भीमरूपिणे **ऊर्ध्वे** तारकाख्याय

योगिनीबलेभ्यः विश्वक्सेनाय जयक्सेनाय

**पाताले** हाटकेश्वराय **मध्ये** राजराजेश्वराय

तेजाय चण्डाय

समस्तशिवरात्रीयागदेवताभ्यः विष्णुपञ्चायतनदेवताभ्यः अभयङ्करी-देव्यै क्षेमङ्करीभवान्यै सर्वशत्रुघातिन्यै इह राष्ट्राधिपतये अमुकभैरवाय एकविंशतिस्नानानि नमः॥ (देवों को अक्षत, दही, तिल, शहद, घी समेत पानी से तृप्ति (तर्पण) करना) ततो दध्यक्षततिलैरित्थं मध्वाज्यमिश्रितैः। तर्पयेदुदकैर्देवा-नृषिपूर्वान्सपितृकान्॥ (अञ्जली करके देवों का ध्यान करना) गृत्समदस्य गायत्री॥ विश्वेदेवास आगत। शृण्वताम इमं हवमिदं बर्हिर्निपीदत। (तर्पण करना) ब्रह्मास्तृप्यतां विष्णुस्तृ० रुद्रस्तृ० प्रजापतिस्तृ० वेदास्तृ० छन्दांसितृ० ऋषयस्तृ० तपोधनास्तृ० आचार्यास्तृ० गन्धर्वास्तृ० पितराचार्यास्तृ० संवत्सराः सावयवास्तृ० देवास्तृ० अप्सरसस्तृ० देवानुगास्तृ० नागास्तृ० सागरास्तृ० पर्वतास्तृ० सरितस्तृ० मनुष्यास्तृ० यक्षास्तृ० रक्षांसितृ० पिशाचास्तृ० सुपर्णास्तृ० भूतानितृ० पशवस्तृ० वनस्पतयस्तृ० औषधयस्तृ० भूतग्रामाश्चतु-र्विधास्तृ० असुरास्तृ० क्रूरास्तृ० सर्पास्तृ० जम्बुकास्तृ० खगास्तृ० विद्याधरास्तृ० जलाधारास्तृ० निराधारास्तृ० पापधर्मरतास्तृ० सर्वे देवाः तृ० सर्वे ग्रहास्तृ० यमस्तृप्यतां धर्मराजस्तृ० मृत्युस्तृ० अन्तकस्तृ० वैवस्वतस्तृ० कालस्तृ० सर्वप्राणहरस्तृ० औदुम्बरस्तृ० नीलस्तृ० ब्रध्नस्तृ० परमेष्ठीतृ० वृकोदरस्तृ० भीमस्तृ० चित्रस्तृ० चित्रगुप्तस्तृ०॥ कण्ठोपवीती (गले में जनेऊ रखकर ऋषियों का ध्यान करना) अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः, तमीमहे महागयम्॥ (ऋषियों

